अइणेहिण[1] भासिउ, रइमइवासिउ,
सवणसकुलियह[2] अमियसरो ।
लइ[3] लिहइ[4] वियक्खणु, अत्थह लक्खणु,
सुरइसंगि[5] जु[6] विअड्ढनरो[7] ॥ २३ ॥ [ डुमिलाछन्दः । ]

1 C अहणेइह । 2 B सुकुलि जिय; C सुकुलि जहि । 3 C लह । 4 A C लहइ । 5 C सरिग । 6 C A सु । 7 A B विअढ° ।

[ टिप्पनकरूपा व्याख्या ]

[ २३ ] यतोऽतिस्नेहेन भाषितम्, रतिमतिवासितम्, कर्णशष्कुल्यां यथाऽमृतम् । अन्यच्च – विचक्षणो लए – भावे लिखति जानाति । अन्यच्च – अर्थलक्षणं स एव वेत्ति, यः सुरतिसङ्गे विदग्धो भवति, नापरः । डुमिल्लाच्छन्दः । तल्लक्षणं यथा –

डुमिलाहि पयासिण, मत्त विसेसिण, दोहिं तहिं चिय च्यारि भणू ।
भण मत्त बत्तीस वितीसघमेल (?) अट्ठय ठाम ठवेस गणू ॥
गण अन्न मिलिज्जइ, सोइ ठविज्जइ, तं पुण जाणि ण भंति करी ।
करि जमकु विसाइण, पाइण पाइण, सुट्ठु वि छंदु विभंजि परी ॥

॥ इति श्रीदेवेन्द्रसूरिशिष्य वा० श्रीलक्ष्मीचन्द्रविरचितायां संदेशरासकवृत्तौ प्रथमः प्रक्रमः ॥

[ अवचूरिका ]

[ २३ ] यतोऽतिस्नेहेन भाषितम्, रतिमतिवासितम्, कर्णशष्कुल्योः यथाऽमृतम् । अन्यच्च – एतस्यार्थलक्षणं स एव विचक्षणो लए – भावे लिखति – जानाति, यः सुरतिसङ्गे विदग्धो भवति, नापरः ॥

[ डुमिला छन्दो यथा – ] डुमिला हि प० ॥

## —२ द्वितीयः प्रक्रमः—

विजयनयरहु कावि वररमणि[1],
उत्तंगथिरथोरथणि[2], [3]बिरुडलक्क धयरट्ठपउहर ।
दीणाणण पहु णिहइ[4], [5]जलपवाह पवहंति [6]दीहर ।
विरहग्गिहि [7]कणयंगितणु तह [8]सामलिमपवन्नु[9] ।
णज्जइ[10] राहि[11] विडंबिअउ[12] ताराहिवइ सउन्नु[13] ॥ २४ ॥

फुसइ लोयण रुवइ[14] दुक्खत्त[15],
[16]धम्मिल्लउमुक्कमुह[17], विज्जंभइ [18]अरु अंगु[19] मोडइ ।
विरहानलि संतविअ[20], ससइ दीह करसाह[21] तोडइ ।

1 A रवणि; B तरुणि । 2 C °थोरु°; B थोरघण । 3 A बरुड°; B विरड° । 4 B निहइ; C निहय । 5 C जलु जल° । 6 B पवहंत । 7 C कणयग्गि° । 8 A सामलउ; C सामलिय । 9 C पवन्न । 10 A णिज्जइ । 11 B राह । 12 C विडंबिओ॑ । 13 C सवन्नु । 14 B रुयइ; C रुअइ । 15 B दुक्खित्त । 16 C धम्मिल्लो । 17 C मुहु । 18 B त; C निय॰ । 19 A अंग । 20 A संतवीअ । 21 C °सास ।

[ टिप्पनकरूपा व्याख्या ]

[ २४ ] अथ कथास्वरूपमाह–'विजयनयरहु॰'–विक्रमपुरात् काचिद् वरनाइ(यि)का उच्चस्थिरदृढ-स्थूलकुचा भ्रमरीमध्यमध्या धार्त्तराष्ट्र-राजहंस-गतिर्विरहिणीत्वाद् दीनानना । नेत्रयोर्दीर्घभरं जलप्रवाहं प्रवहन्ती परदेशगतं पतिं पश्यति । तथा कनकाङ्ग्या विरहाग्निना तनु शरीरं श्यामलिमाप्रपन्नाम्, कविः कथयति–मन्ये ताराधिपतिश्चन्द्र[:] सम्पूर्णो राहुणा विडम्बितो ग्रस्त इति ॥ रड्डुच्छन्दः ॥ २४ ॥

[ २५ ] तस्या विरहावस्थां व्यावर्णयन्नाह–लोचने–'फुसइ'–उत्फुंसति दुःखार्त्ता रोद(दि)ति । धम्मिल्लोन्मुक्तमुखा विजृम्भति । अङ्गं मोटयति । विरहानल-

[ अवचूरिका ]

[ २४ ] विक्रमपुरात् काचिद् वरनायिका उच्चस्थिरदृढस्थूलकुचा भ्रमरीमध्यमध्या धार्तराष्ट्रगतिः, विरहिणीत्वाद् दीनानना, नेत्रयोर्दीर्घतरजलप्रवाहप्रवहन्ती परदेशगतं प्रभुं पश्यति । पुनः कीदृशी–तथा कनकाङ्ग्यास्तनु तथा श्यामं प्रपन्नम्, यथा ज्ञायते ताराधिपतिः सम्पूर्णो विडम्बितो राहुणा–ग्रस्त इति ॥

[ २५ ] तस्या विरहावस्थां व्याचष्टे–लोचने उत्फुंसति, दुःखार्त्ता रोदिति, धम्मिल्लमुक्ता, मुखे विजृम्भति, अङ्गं मोटयति, विरहानलसंतप्ताऽऽश्वसति, करशाखास्फोटयति । एवं मुग्धया विल-

इम[1] मुद्धह[2] विलवंतियह महि चलणेहि छिहंतु[3]।
अद्धुड्डीणउ तिणि[4] पहिउ पहि जोयउ पवहंतु ॥ २५ ॥ [रड्डु०]

*

तं जि[5] पहिय[6] पिक्खेविणु [7]पिअउक्कंखिरिय[8],
मंथरगय सरलाइवि[9] उत्तावलि चलिय[10]।
तह मणहर [11]चल्लंतिय चंचलरमणभरि[12],
छुडवि[13] खिसिय[14] रसणावलि [15]किंकिणिरवपसरि[16] ॥ २६ ॥

1 A इव। 2 C मुंद्धह; B मुद्धहं। 3 C छिवंतु। 4 A तं; C त। 5 C ज। 6 A पहिउ। 7 B पिय°। 8 A उखिंखिरीय; C उकिंषिरिय। 9 A °सरलाविअ। 10 A चलिअ। 11 B चलणिहि चल्लं°। 12 A °रवणि°। 13 A छुड्डवि। 14 A खिसी-अ। 15 A कंकणि; B किकणि। 16 A C गय पसरि।

[ टिप्पनकरूपा व्याख्या ]

**संतप्ताऽऽश्वसति, करसाषा(°शाखाः)त्रोटयति। एवं मुग्धया विलपन्त्या महीं चलनाभ्यां क्रामन् अर्द्धो(ध्वो)द्विग्नः, नगरमध्यं विहाय पार्श्वे एव संचरन्, पथि प्रवहन् पथिको दृष्टः ॥ रड्डुच्छन्दः ॥ २५ ॥**

**[ २६ ] तं पथिकं दृष्ट्वा पत्युत्कण्ठिता, मन्थरगतिं सरलयित्वा यावदुत्सुकगत्या चलिता, तावन्मनोहरं चलन्त्याश्चपलरमणभरात् कटिप्रदेशाद् रसनाऽऽवलिः किङ्किणीक्वणयुक्ता छुटिता। आभाणकनाम च्छन्दः। तल्लक्षणं यथा–**

मत्त होहि चउरासी चहु पय चारि कल
ते सठि जोणि निवद्धी जाणहु चहु अ दल।
पंचक्कलु वज्जिज्जहु गणु सुद्धि वि गणहु
सो वि आहाणउ छंदु के वि रासउ मुणहु ॥

**पदे पदे एकविंशति मात्रा सर्वसं(ख्या) चउरासीति। आदौ षट् कलाः, तदनु त्रयः। अपरस्तु चतुः कलाः। एकस्त्रिमात्रकः। पञ्चकलः वर्ज्जनीयः ॥ एष(तत्) रासकच्छन्दः ॥ २६ ॥**

[ अवचूरिका ]

**पन्त्या महीं चलणा(ना)भ्यां क्रामन्, अध्वोद्विग्नो नगरमध्यं विहाय पार्श्वे संचरन् पथि प्रवहन् पथिको दृष्टः ॥**

**[ २६ ] पथिकं दृष्ट्वा तया किं कृतमित्याभाणकछन्दसाऽऽह – तं पथिकं दृष्ट्वा पत्युत्कण्ठिता मन्थरगमनं त्यक्त्वा यावदुत्सुका गत्या चलिता तावन्मनोहरं चलन्त्यास्तस्याश्चपलरमणभराद् रसना किङ्किणीक्वणप्रसरा छुटिता ॥**

छन्दो यथा–'मत्त होइ चउरासी चहु पय च्यारि कल० ॥'

तं जं मेहल[1] ठवइ गंठि णिट्ठुर[2] सुहय,
तुडिय[3] ताव[4] [5]थूलावलि [6]णवसरहारलय ।
सा तिवि किवि संवरिवि [7]चइवि किवि[8] संचरिय[9],
णेवर चरण[10] विलग्गिवि तह पहि[11] पंखुडिय[12] ॥ २७ ॥
पडि उट्ठिय सविलक्ख सलज्जिर संझसिय[13],
तउ[14] सिय[15] सच्छ [16]णियंसण मुद्धह विवलसिय[17] ।
तं संवरि अणुसरिय[18] पहियपावयणमण,
फुडवि[19] णित्त[20] कुप्पास विलग्गिय दर सिहण[21] ॥ २८ ॥
छायंती[22] कह कह व सलज्जिर [23]णियकरहि[24],
कणयकलस झंपंती णं इंदीवरहि[25] ।

1 A मेहलि । 2 B C निट्ठुर । 3 A तुडवि; C तुडच्चि° । 4 A ताम; C ताब । 5 C धूलाबलि । 6 B C नव° । 7 C चयवि । 8 A केवि । 9 A संचरीय । 10 A चरणि । 11 B पय । 12 C पक्खडिय । 13 A संझसीय । 14 A तं । 15 A सिर° । 16 B C नियं° । 17 B °सिअ । 18 A अणुसरीअ । 19 C फुडिवि । 20 B णत्त; C नित । 21 A दर सिणह । 22 A यंती । 23 B C निय° । 24 B °करिहि । 25 A B वरिहि ।

[ टिप्पनकरूपा व्याख्या ]

**[ २७ ] सा सुभगा यावत् तां मेखलां ग्रन्थौ स्थापयति, तावता मुक्तामयी स्थूला नवसरहारलताऽऽवलिस्त्रुटिता । [ ………… ] तावता नूपुरचरणाभ्यां विलग्य निर्बलत्वात् पतिता ॥ २७ ॥**

**[ २८ ] यावत् पतितोत्थिता सविलक्षा सलज्जा संभ्रमिता । तावत् श्वेतं स्वच्छं निवसनं – शिरोवस्त्रं विवलसितं – दूरीभूतम् । तदपि संवरयित्वा पथिकप्रापन(ण)-म[न]स्का यावत् संसृता, तावता नेत्रपट्टं वस्त्रमयं कूर्पासकं कञ्चुकं विदार्य कुचौ ईषद्दरे छिद्रे विलग्नौ – प्रकटौ जा(या)तावित्यर्थः ॥ २८ ॥**

**[ २९ ] सा बाला सलज्जा पथिकं पति[वि]रहिणीत्वात् करुणम् , पद्मिनीत्वात्**

[ अवचूरिका ]

[ २७ ] सा शुभा यावता मेखलां ग्रन्थौ स्थापयति तावता मुक्तामयी स्थूलावलिर्नवसरहारलता त्रुटिता । ततस्तानि कानिचिन्मुक्ताफलानि संमीलयित्वा ( संमील्य ) कानिचिदौत्सुक्यात् त्यक्त्वा संचलिता, तावता नूपुरचरणाभ्यां विलग्य पतितेत्यर्थः ॥

[ २८ ] यावत् पतितोत्थिता सविलक्षा सलज्जा संझसिता तावत् श्वेतं स्वच्छं निवसनं – शिरोवस्त्रं विवलसितं – दूरीभूतम्; तदपि संवरइत्वा ( संवृत्य ) पथिकप्रापमनस्का यावत् संसृता, तावता नेत्रपट्टं वस्त्रमयं कूर्पासं कञ्चुकं विदार्य कुचौ दरे छिद्रे विलग्नौ – प्रकटौ यातावित्यर्थः ॥

[ २९ ] सा सलज्जा पथिकं प्रति, विरहिणीत्वात्, करुणं सविलासं शब्दं कृतवती । निजक-

तो आसन्न पहुत्त [1]सगग्गिरगिर[2]वयणि[3],
किंयउ[4] सद्दु सविलासु[5] करुण दीहरनयणि ॥ २९ ॥
ठाहि ठाहि णिमिसिद्धु[6] सुथिरु अवहारि मणु,
णिसुणि किं पि जं जंपउं हियइ[7] पसिज्जि[8] खणु ।
एय[9] वयण आयन्नि[10] पहिउ कोऊहलिउ[11],
णेय[12] णिअत्तउ ता सु कमद्धु वि णहु[13] चलिउ ॥ ३० ॥

*

[14]कुसुमसराउह रूवणिहि[15] विहि णिम्मविय[16] गरिट्ठ ।
तं पिक्खेविणु पहियणिहिं[17] गाहा भणिया[18] अट्ठ ॥ ३१ ॥

*

1 B गग्गिर° । 2 C 'गिरि° । 3 A तरुणि । 4 A किअउ । 5 A सुविलासु; C सविलास । 6 B णिमिसद्धु; C तिमिसिद्धु । 7 A हिअइ; C हियय । 8 A पसिज्झि; B पसज्जि । 9 A एइ । 10 C आइन्नि । 11 C कोऊहिलियओ॑ । 12 C नेइ निय° । 13 B C नहु । 14 B C कुसम° । 15 C °णिहिं । 16 B णिम्ममिय । 17 A पंथियणिहिं; B पहियजणि । 18 B C पढिया ।

[ टिप्पनकरूपा व्याख्या ]

सविलासम्, शब्दं कृतवती । किं कुर्वन्ती ? – निजकराभ्यां कुचावाच्छादयन्ती । नु वितर्के । कनककलसाविन्दीवराभ्यामाच्छादयन्ती । यतस्तस्या हस्तौ पुनः पुनः सकज्जलनेत्रस्पर्शादक्षालनात् श्यामलतां गतौ । ततो दीर्घनेत्रा सगद्गद्गीर्वदना आसन्नं निकटं प्राप्ता ॥ २९ ॥

[ ३० ] किमाह – 'ठाहि ठाहि°' – निमेषार्द्धं सुस्थिरं यथा(था) तिष्ठ तिष्ठ । मनस्यवधारय । यत् किञ्चिद् जल्पामि तच्छ्रवणाभ्यां शृणु । क्षणं हृदये प्रसीद । तस्या एतानि वाक्यानि आकर्ण्य, पथिकः कौतूहलितः सन्, न क्रमार्द्धं निवृत्तो न चाग्रे चलितः । क्षुब्धत्वात् तथैव संस्थित इत्यर्थः ॥ ३० ॥

[ ३१ ] कुसुमशरायुधां विधिना गरिष्ठां रूपनिधिः(धिं) निर्मितां तां प्रेक्ष्य पथिकेनाष्टौ गाथा भणिता[ः] ॥ ३१ ॥

[ अवचूरिका ]

राभ्यां कुचं(चौ) चाच्छादयन्ती । 'नु' इति वितर्के, कनककलसावीन्दीवराभ्यां नीलोत्पलाभ्यामाच्छादितौ, यतस्तस्या हस्तौ कज्जलनेत्ररसादक्षालनाच्च श्यामतां गतौ । ततो दीर्घनेत्रा सगद्गदा निकटं प्राप्ता ॥

[ ३० ] किमाह – निमेषार्धं सुस्थिरं यथा तिष्ठ तिष्ठ । मनस्यवधारय । यत् किञ्चिज्जल्पामि तच्छ्रवणाभ्यां शृणु । क्षणं हृदये प्रसीद । तस्या एतानि वाक्यानि आकर्ण्य, पथिकः कौतूहलितः सन्, न क्रमार्धं निवृत्तो न चाग्रे चलितः । क्षुब्धत्वात् तथैव संस्थित इत्यर्थः ॥

{पहिउ भणइ बिवि दोहा तसु सु वियड्ढपरि ।
इकु मणि विंभउ थियउ कि[1] रूविणि[2] पिक्खि करि ॥*
किं नु पयावइ अंधलउ[3] अहवि वियड्ढलु आहि ।
जिणि एरिसि[4] तिय णिम्मविय ठविय न अप्पह[5] पाहि ॥*}

*

[6]अइकुडिलमाइपिहुणा विविहतरंगिणिसु[7] सलिलकल्लोला ।
किसणत्तणंमि अलया[8] अलिउलमाल व्व रेहंति ॥ ३२ ॥

1 C किं । 2 B रूवणि । 3 C अंधुलउ । 4 B एरिस । 5 C अप्पहु ।
[ * एतद् दोधकयुगलं B C सञ्ज्ञके आदर्शद्वये लभ्यते, परं A आदर्शे नोपलभ्यते । अत एतस्याव-चूरिकाऽपि न विद्यते । क्षेपकप्रायमिदम् । ] 6 B अय° । 7 A तरंगंसु । 8 A अलिया ।

[ टिप्पनकरूपा व्याख्या ]

दोधकच्छन्दः । तल्लक्षणम्-

तेरह मत्ता विसमपय, सम एगारह मत्त ।
इहु जाणिज्जहु दोहडउ, अन्न म करिजहु वत्त ।

प्रथम-तृतीयपदे [त्रयो]दशमात्रे भवतः । द्वितीय-चतुर्थे पदे एकादशमात्रिके भवतः । इति दोधकः ॥

*

अतः परं पथिकचेष्टामाह-पथिकस्तां दृष्ट्वा दोधकद्वयमाह-'पहिउ'-पथिक[:] द्वौ दोधकौ भणति । तस्यां विदग्धपरिणा एकः मनसि विस्मयो जातः । तां रूपवतीं प्रेक्ष(क्ष्य) अहं एवं मन्ये-किं नु प्रजापतिः अन्धः, अथवा षण्ढः? । यदेतादृशीं स्त्रीं निर्माय येनाऽऽत्मपार्श्वे न स्थापितेति ।

*

[ ३२ ] देवीवर्णनं चरणाद्, नारीवर्णनं शिरसः । अत आह-अतिकुटिल-मात्रया प्रधानाः । यथा तरङ्गिणीषु सलिलकल्लोला वक्राः । कृष्णत्वे अलिकुलमाला इव । एवंविधास्तस्या अलकाः शोभन्ते ॥ ३२ ॥

[ अवचूरिका ]

[ ३१ ] कुसुमस(श)रायुधं रूपनिधिर्विधिना गरिष्ठा निर्मिता । तां प्रेक्ष्य पथिकेनाष्टौ गाथा भणिताः । छन्दो यथा-

'तेरह मत्ता विसमपय, समएगार[ °ह मत्त ।' इत्यादि ] ।

[ ३२ ] देवीवर्णनं चरणाद्, नारी० शिरसः । अत आह-तस्या अलका [:] शोभन्ते । कीदृशाः?-अतिकुटिलमात्रया प्रधानाः, तरङ्गिणीसलिलकल्लोला इव वक्राः । कृष्णत्वेनालि-कुलमाला इव ॥

रयणीतमविद्दवणो[1] अमियंझरणो[2] सपुण्णसोमो य ।
अकलंक माइ[3] वयणं[4] वासरणाहस्स पडिबिंबं ॥ ३३ ॥
[5]लोयणजुयं[6] च णज्जइ[7] रविंददल दीहरं च राइल्लं ।
पिंडीरकुसुमपुंजं तरुणिकवोला[8] कलिज्जंति ॥ ३४ ॥
कोमल [9]मुणालणलयं[10] अमरसरुप्पन्न बाहुजुयलं[11] से[12] ।
ताणंते करकमलं णज्जइ[13] दोहाइयं पउमं ॥ ३५ ॥
सिहणा सुयण-खला[14] इव थड्ढा निच्चुन्नया य मुहरहिया ।
संगमि सुयणसरिच्छा आसासहि[15] बे वि अंगाइं ॥ ३६ ॥

1 C °विद्दमणो । 2 B य पुण्ण°; C सपुन्न° । 3 B °माय° । 4 C °बइणं । 5 C लोअण° । 6 C जुअं । 7 B णज्जइं । A 8 कवोलं । 9 B C °मिणाल° । 10 A नलयं; B णिलयं । 11 A °जुवलं । 12 B च । 13 B णज्जइं । 14 C कला । 15 B आसासइ ।

[ टिप्पनकरूपा व्याख्या ]

[ ३३ ] तस्या वदनं वासरनाथस्य प्रतिबिम्बवद् रराज । कीदृशम्?–रजनीतमोविद्रावकः, अमृतस्रावी, संपूर्णः अकलङ्को यः सोमो मात्रं उपमा ॥ ३३ ॥

[ ३४ ] अहमेवं मन्ये–तस्याः स्त्रियाया लोचनयुगं दीर्घतरं रागाढ्यं अरविन्ददलं जिग्य(जय?)ति । दाडिमीपुष्पगुच्छं तस्या[ः] कपोलो(लौ) जिग्य(जय)तः ॥ ३४ ॥

[ ३५ ] अहमेवं मन्ये–तस्या बाहुयुगलम्, अमरसरउत्पन्नं कोमलं मृणालनलकम्, पद्मसरसः संभूतस्वर्णकमलं भूमिमध्यदण्डं जिग्य(जय?)ति । तयोः बाह्वोः प्रान्ते यत् करकमलं तद् द्विधाभूतं पद्मं ज्ञायते ॥ ३५ ॥

[ ३६ ] तस्या नाइ(यि)कायाः कुचौ स्वजनखलू(लौ) इव शोभतः । खलोपमानं कथम्?–स्तब्धौ नित्योन्नतौ मुखरहितौ । अप्रसूतत्वात् । सङ्गमेनान्योऽन्यमिलितेन स्वजनसदृक्षौ । किं कुर्वतौ?–द्वावपि अङ्गानि आश्वासयन्तौ ॥ ३६ ॥

[ अवचूरिका ]

[ ३३ ] तस्या वदनं वासरनाथस्य प्रतिबिम्बमिव रराज । कीदृशम्?–रजनीतमोविद्रावकोऽमृतस्रावी । सम्पूर्णसोमस्य अकलङ्कमात्रा वासरनाथस्योपमा नान्या ॥

[ ३४ ] यस्या लोचनयुगलमरविन्ददलं दीर्घतरं रागाढ्यं शोभते । पिण्डीरकुसुमपुञ्जवद् दाडिमीपुष्पगुच्छवत् तस्याः कपोलौ दृश्येते ॥

[ ३५ ] तस्या बाहुयुगलं अमरसरउत्पन्नं मानसशरःसंजातं मृणालनलकं मिथःस्वर्णकमलस्य भूमिमध्यस्थदण्डमिव कोमलं शोभते, तयोर्बाहु(ह्वोः) यत्करकमलं तद् द्विधाभूतपद्ममिव ज्ञायते ॥

[ ३६ ] तस्या[ः] कुचौ स्वजनखलाविव शोभतः । खलोपमा[न]माह–स्तब्धौ कठिनौ नित्योन्नतौ, अप्रसूतत्वात्, मुखरहितौ । तथा च सङ्गमे मेले स्वजनसदृक्षौ । यतो द्वावप्यङ्गान्याश्वाश्वासयतः । अथवाऽन्तरबाह्याङ्गे आश्वासयतः ॥

गिरिणइ[1] समआवत्तं जोइज्जइ [2]णाहिमंडलं गुहिरं[3] ।
मज्झं मच्चसुहं [4]मिव तुच्छं[5] तरलग्गईहरणं ॥ ३७ ॥
[6]जालंधरिथंभजिया[7] ऊरू रेहंति[8] तासु अइरम्भा ।
वट्टा य[9] णाइदीहा सरसा सुमणोहरा जंघा[10] ॥ ३८ ॥ [क्षेपक†]
रेहंति पउमराइ व [11]चलणंगुलि [12]फलिहकुट्टि णहपंती ।
तुच्छं रोमतरंगं उव्विन्नं[13] [14]कुसुमनलएसु ॥ ३९ ॥
सयलज्ज सिरेविणु पयडियाइँ अंगाइँ तीय[15] सविसेसं ।
को कवियणाण[16] दूसइ[17], सिट्ठं विहिणा[18] वि पुणरुत्तं ॥४०॥

1 B C °नइ° । 2 C नाभि° । 3 A गहिरं । 4 C सुहंम्मिव । 5 B तुछंति । 6 C जालंधर° । 7 C °बिया; B °जिऊ । 8 A रेहिंति । 9 B वट्टा इ णाय° । 10 C रम्मा । † A आदर्शे एतदुल्लेखो लभ्यते । 11 A चरणं° । 12 फलिय° । 13 C उव्विल्लं । 14 A C कुसम° । 15 C तीइ । 16 A कईयणाण । 17 B दूसई । 18 A विहणाइ ।

[ टिप्पनकरूपा व्याख्या ]

[ ३७ ] तस्या नाभिमण्डलं गिरिनद्यावर्त्तसदृशं [ गभीरं ] दृश्यते । अन्यच्च – तस्या मध्यं मर्त्यसुखमिव – मानुख्य(ष्य)कभोगसातमिव तुच्छं दृश्यते । कदाचन दृग्गोचरम्, कदाचनादृग्गोचरम् । अथवा तरलगतौ हारिणं पदमिव ॥ ३७ ॥

[ ३८ ] तस्या ऊरू जालन्धरि-कदली-गर्भसदृशौ राजतः । च पुनः – वृत्ते, नातिदीर्घे, सुतरां मनोहरे सरसे जङ्घे राजतः ॥ ३८ ॥

[ ३९ ] तस्याश्चरणाङ्गुलयः पद्मरागखण्डानीव शोभन्ते । तथा च – तासामङ्गुलीनामुपरि नखाः पद्मरागोपरिस्थस्फटिकखण्डानीव । तथा च – तास्वङ्गुलीषु उद्गम-कमलनालतन्तुसदृशं रोमतरङ्गं व्यरचत् ॥ ३९ ॥

[ ४० ] विधिना सै(शै)लजां सृष्ट्वा तस्या अङ्गानि तद्वत्, ततो वा सविशेष[म्],

[ अवचूरिका ]

[ ३७ ] तस्या नाभिमण्डलं गिरिनद्यावर्त्तसदृशं गंभीरं दृश्यते द्योतते वा । अन्यच्च – मध्यं मर्त्यसुखमिव तुच्छम्, कदाचनेन्द्रियगोचरम्, कदाचन तरलगतेर्हरणम्, अथवा तरलगतौ हारिणं पदमिव ॥

[ ३८ ] जालन्धरी-कदलीस्तम्भ-जेतारौ तस्या ऊरावतिरम्यौ राजतः । वृत्ते नातिदीर्घे सरसे सुमनोहरे जङ्घे राजतः ॥

[ ३९ ] तस्याश्चरणाङ्गुलयः पद्मरागखण्डानीव शोभन्ते । तथा च – तासामङ्गुलीनामुपरि नखाः पद्मरागोपरिस्थितस्फटिकखण्डानीव । तथा च – तास्वङ्गुलिषूद्गमकमलनालतन्तुसदृशं रोमतरङ्गं व्यरचत् ॥

[ ४० ] विधिना शै[ल]जां सृष्ट्वा तस्या अङ्गानि तद्वत् ततोऽपि सविशेषं यथा प्रग(क)टितानि – कृतानि । अत आह – कः कवीन् दूषयति, यद् विधिनाऽपि पुनरुक्तं सृष्टम् ॥

गाहा तं निसुणेविणु [1]रायमरालगइ[2],
[3]चलणंगुट्ठि धरत्ति सलज्जिर उल्लिहइ ।
तउ[4] पंथिउ कणयंगि तत्थ बोलावियउ[5],
कहि[6] जाइसि हिव पहिय कह व तुह[7] आइयउ[8] ॥४१॥

णयरणामु[9] सामोरु सरोरुहदलनयणि,
[10]णायरजणसंपुन्नु[11] हरिस [12]ससिहरवयणि[13] ।
धवलतुंगपायारिहि तिउरिहि[14] मंडियउ[15],
णहु दीसइ[16] कुइ मुक्खु सयलु[17] जणु[18] पंडियउ ॥४२॥

विविहविअक्खण[19]सत्थिहि जइ पवसिइ[20] णिरु,
सुम्मइ छंदु मणोहरु पायउ महुरयरु[21] ।

1 C राइ° । 2 A °गय; B °गइं । 3 A चरणं° । 4 A तं । 5 A बोला-विअउ; C वोलाविउ । 6 A कह । 7 B तुहु । 8 C आइउ । 9 B नयरु नामि । 10 C नायर° 11 A संपुन्न । 12 C सशिहर° । 13 C °बयणि । 14 A तिउरि मं° । 15 C मंडिउ । 16 B दीसइं । 17 C सयल° । 18 A जण । 19 B वियखणु । 20 B पविसीइ । 21 C महुरु सरु ।

[ टिप्पनकरूपा व्याख्या ]

यथा प्रकटितानि – कृतानि । अत आह – कः कवीन् दूषयति । यद् विधिनाऽपि पुनरुक्तं सृष्टम् ॥ ४० ॥

[ ४१ ] तदनु किं कृतं तया तदाह – 'गाहा तं निसुणे' – ता गाथाः श्रुत्वा राजमरालगत्या चरणाङ्गुष्ठेन धरित्रीं सलज्जमुल्लिखन्त्या कनकाङ्ग्या पथिको वाचालितः । अतः परं क्व यास्यसि, कुतः समुपागतः ॥ ४१ ॥

[ ४२ ] तत्पृष्टः पथिकः प्राह – 'नयरु°' – हे हेमसरोरुहदलनेत्रे शशधरवदनि(°ने) ! सामोरु = मूलस्थाननाम नगरं वर्त्तते । कीदृशम् ? – नागरिकैः संपूर्णम्, धवलतुङ्गप्राकारैस्त्रिपुरैश्च मण्डितम् । अन्यच्च – यत्र कोऽपि न मूर्खः, किन्तु सकलोऽपि जनः पण्डितः ॥ ४२ ॥

[ अवचूरिका ]

[ ४१ ] गाथाः श्रुत्वा ततो राजहंसगत्या चरणाङ्गुष्ठेन धरित्रीं सलज्जमुल्लिखन्त्या तया कनकाङ्ग्या पथिक इति वाचालितः – हे पथिक ! [ क्व यास्यसि ? कुतस्त्वमागतः ? ॥ ]

[ ४२ ] सामोरं मूलस्थानं नाम नगरम् । हे सरोरुहदलनयने ! नागरजनैः सम्पूर्णम्, शशधरवदनि(ने) धवलतुङ्गप्राकारैस्त्रिपुरैश्च मण्डितं वर्तते । तत्र कोऽपि मूर्खो न दृश्यते, सकलोऽपि जनः पण्डितोऽस्ति ॥

कह व ठाइ[1] चउवेइहिं[2] वेउ पयासियइ[3],
कह बहुरूवि[4] णिबद्धउ रासउ भासियइ[5] ॥ ४३ ॥
कह व ठाइ[6] सुदयवच्छ[7] कत्थ व[8] नलचरिउ[9],
कत्थ व[10] विविहविणोइहि भारहु उच्चरिउ[11] ।
कह व ठाइ आसीसिय चाइहि[12] [13]दयवरिहिं,
रामायणु अहिणवियअइ[14] कत्थ वि कयवरिहिं ॥ ४४ ॥
के [15]आइन्निहिं [16]वंसवीणकाहलमुरउ,
कह [17]पयवण्णणिबद्धउ सुम्मइ[18] गीयरउ ।
आयण्णहि[19] सुसमत्थ [20]पीणउन्नयथणिय[21],
चल्लहि चल्ल[22] [23]करंतिय[24] कत्थ[25] वि णट्टणिय[26] ॥ ४५ ॥

1 C ठाइं । 2 A °वेयहिं; C °बेइहिं । 3 A °सिअइं । 4 A वहरूवि णि° । C °रूविहिं ब° । 5 A भासीअइ; C भासियइं । 6 C ठाइं । 7 A C सुदवच्छ । 8 A C वर नल° । 9 C चरियउ । 10 C कत्थ विविहिं । 11 B उच्चरिउं । 12 A °चाईय । 13 C पवइ° । 14 A °णवीअइ । 15 C आइन्निहि; B आयन्नहिं । 16 C बंसवीण°; B वीणवंस° । 17 A पयवंन°; C पयबन्न° । 18 A सुंमइ । 19 B आइन्निहिं । 20 C पीणुन्नय° । 21 A °थणिहि । 22 A चोअ करंति । 23 B करंती । 24 'य' नास्ति B । 25 A कत्थएवि; C कत्थ व । 26 A णइणिहि ।

[ टिप्पनकरूपा व्याख्या ]

[४३] यदि विचक्षणैः सह पुरान्त[ः] परिभ्रम्यते, तदा मनोहरं छन्दसा मधुरं प्राकृतं श्रूयते । कुत्रापि चतुर्वेदिभिः वेद[ः]प्रकाश्यते । कुत्रापि बहुरूप(पि)-भिर्निबद्धो रासको भाष्यते ॥ ४३ ॥

[४४] कुत्रापि सु(स)दयवच्छकथा, कुत्रापि नलचरित्र[म्], कुत्रापि विविध-विनोदैः भारतं उच्चरितं श्रूयते । अन्यच्च-कुत्रापि कुत्रापि आशिषा त्यागि-भिर्द्विजवरैः रामायणमभिनूयते ॥ ४४ ॥

[४५] केचिद् वंशवीणकाहलमुरजमृदङ्गशब्दान् आकर्णयन्ति । क्वापि

[ अवचूरिका ]

[ ४३ ] यदि विचक्षणैः सह पुरान्तः परिभ्रम(म्य)ते, तदा मनोहरं छन्दसा मधुरं प्राकृतं श्रूयते, कुत्रापि चतुर्वेदिभिर्वेदः श्रूयते, प्रकाश्यते वा । कुत्रापि बहुरूपकैर्निबद्धो रासको भाक्ष(ष्य)ते ॥

[ ४४ ] कुत्रापि सदयवच्छकथा, कुत्रापि नलचरित्रम्, कुत्रापि विविधविनोदैर्भारतं श्रूयते; कुत्राप्याशिषा त्यागिभिर्द्विजवरैर्भारत ( रामायण ? ) मुच्चार्यते ॥

[ ४५ ] केऽपि वंशवीणाकाहलमुरजशब्दानाकर्णयन्ति । कुत्रापि प्राकृतवर्णैर्निबद्धो गीतरवः श्रूयते । कुत्राप्याकर्पणे समर्थाः पीनोन्नतस्तन्यः नर्त्तक्यश्चलचलशब्दं कुर्वन्त्यः परिभ्रमणं कुर्वन्ति ॥

नर अउव्व विंभविय[1] विविहनडनाडइहिं,

मुच्छिज्जहि[2] पविसंत [3]य वेसावाडइहिं[4] ।

भमहिं का[5] वि [6]मयविंभल गुरुकरिवरगमणि,

अन्न रयणताडंकिहि[7] [8]परिघोलिरसवणि ॥ ४६ ॥

अवर कह व णिवडब्भरघणतुंगत्थणिहिं,

भरिण[9] मज्झु णहु[10] तुट्टइ[11] ता विंभिउ[12] मणिहिं ।

का वि केण सम[13] दर हसइ नियकोअणिहि[14],

छित्ततुच्छतामिच्छ[15] तिरच्छियलोयणिहि ॥ ४७ ॥

1 B विम्हयहिं; C विम्हि° । 2 B मुच्छिज्जइ; C मुच्छज्जहिं । 3 A पवसंतिय; B पविसंता । 4 B C °वाडयहि । 5 C केवि । 6 B C मयविंभल । 7 A ताडंकहि । 8 C परिघोल्हि° । 9 C धरणि । 10 A णुहु । 11 C तुट्टे । 12 B विंबउ; C विंभउ । 13 C सम दसइ । 14 A °भियकोअणिहि; B नियइमइकोइणिहि; C नयमइकोऊणिहि । 15 C °तरिच्छिय ।

[ टिप्पनकरूपा व्याख्या ]

**प्राकृतवर्णनिबद्धो गीतरवः श्रूयते। कुत्रापि आकर्णने(र्षणे) समर्था[:]पीनोन्नतस्तन्यः नर्त्तक्य[:] चलचलेतिशब्दं कुर्वन्त्यश्चलन्ति ॥ ४५ ॥**

**[ ४६ ] यत्र नरा विविधनटनाटकिभिर्विस्मयन्ते । यत्र वेश्याभिर्वेश्यापाटके प्रविशन्तो नीरागिणोऽपि मूर्च्छ्यन्ते। तद् वर्णनमाह – काश्चिद् वेश्या मदभिम्भला गजगमना भ्रमन्ति। अन्या रत्नताडङ्कैः प्रतिघोलन्तश्रवणाः परिभ्रमन्ति ॥ ४६ ॥**

**[ ४७ ] अपरा काचन भ्रमति। कीदृशी ? – यत् तस्या मध्यं निव(बि)डोत्तरघनतुङ्गस्तनयोर्भारेण न त्रुटति तदाऽऽश्चर्यम्। अपरा काचन केनापि सह निजकमदकौकुच्यां ( कुचाभ्यां ) क्षिप्ततुच्छतामिच्छ[म्] कज्जलं तिर्यग(क्) स्थितलोचनाभ्यां दर मनाक्(ग्) हसति ॥ ४७ ॥**

[ अवचूरिका ]

[ ४६ ] यत्र नरा विविधनटनाटिकीभिर्विस्मयन्ते। यत्र वेश्याभिर्वेश्यापाटके प्रविशन्तो नीरागिणोऽपि मूर्च्छ्यन्ते । तद्वर्णनमाह – काचिद् वेश्या मदभिम्भला गजगमना भ्रमति । अन्या रत्नताडङ्कैः प्रतिघोलन्तश्रवणा भ्रमन्ति ॥

[ ४७ ] अपरा काचन भ्रमति । कीदृशी ? – तस्या मध्यं निव(बि)डोद्धुरघनतुङ्गस्तनयोर्भारेण न त्रुटति, तदाश्चर्यम् । अपरा काचित् केनापि सह निजकमदकौकुचाभ्यां क्षिप्ततुच्छकज्जलतिर्यक्स्थितलोचनाभ्यां दर मनाक्( ग् ) हसति ॥

अवर का वि सुविअक्खण[1] विहसंती[2] [3]विमलि[4],
णं[5] ससिसूर[6] णिवेसिय[7] रेहइ[8] गंडयलि[9] ।
मयणवट्टु[10] [11]मिअणाहिण कस्स व पंकियउ[12],
अन्नह भालु[13] तुरक्कि तिलइ आलंकियउ ॥ ४८ ॥
हारु कस्स[14] वि थूलावलि णिट्ठुर रयणभरि,
लुलइ मग्गु अलहंतउ थणवट्टह सिहरि ।
गुहिर[15] णाहिविवरंतरु[16] कस्स[17] वि कुंडलिउ[18],
तिवल[19] तरंग[20] पसंगिहि रेहइ मंडलिउ[21] ॥ ४९ ॥
रमणभार[22] गुरुवियडउ का कट्ठिहि[23] धरइ[24],
अइमल्हिरउ[25] चमक्कउ तुरियउ णहु[26] सरइ[27] ।

1 C °वियक्खणि । 2 B C विहसंति । 3 B य वि° । 4 C विमल । 5 B णज्जइ णं । 6 A °सूरु° । 7 A णिवेसिउ । 8 'रेहइ' नास्ति B । 9 A गंडियलि । 10 C °वट्ट । 11 B मयणा°; C मइणा° । 12 A पंकअउ । 13 C भाल । 14 A कस थूला°; B कस व थूला° । 15 A गहिर° । 16 B °वियडंतरु । 17 B C कस्स व । 18 A कुंडलियउ । 19 A B विमल° । 20 B तरंगि पसंगिउ । 21 C मंडलियउ । 22 A °भारु । 23 C कट्ठिहिं । 24 A वरइ । 25 C °मिल्हिरउ । 26 B नहु । 27 B सरइं ।

[ टिप्पनकरूपा व्याख्या ]

**[ ४८ ] अपरा काऽपि सुविचक्षणा विहसन्ती विमला निर्म्मलहास्या भ्रमति । कीदृशी ? – अहमेवं मन्ये शशि-सूर्यौ गण्डयोर्निविष्टौ । कस्याश्चिन्मदनपट्टं कुचस्थलं मृगनाभिपङ्काङ्कितं वर्त्तते । अन्यस्या भालं तीक्ष्णेन तिलकेनालङ्कृतं वर्त्तते ॥ ४८ ॥**

**[ ४९ ] कस्याश्चित् स्तनपट्टसिष(शिख)रे हारः प्रवेशमलभन् रत्नभरेण लोलति । कस्याश्चिन्नाभिविवरं गम्भीरं कुण्डलितं – कुण्डलाकारं वर्त्तते । पुनः कीदृशं नाभिविवरम् ? – त्रिवलीतरङ्गप्रसङ्गतो मण्डलितमिव शोभते ॥ ४९ ॥**

**[ ५० ] काचिद् रमणभारं गुरुविकटम्, अतिस्थूलत्वात्, कष्टेन बिभर्त्ति ।**

[ अवचूरिका ]

[ ४८ ] अपरा काचित् सुविचक्षणा विकसन्ती विमलाऽतिनिर्मलहास्या भ्रमति । कीदृशी ? – मन्ये, शशि-सूर्यौ गण्डयोर्निविष्टौ । कस्याश्चन मदनपट्टं कुचस्थलं मृगनाभिपङ्काङ्कितं वर्तते । अन्यस्या भालं तीक्ष्णेन तिलकेनालङ्कृतं वर्तते ॥

[ ४९ ] कस्याश्चन स्तनपट्टशिखरे निष्ठुरे हारः प्रवेशमलभन् रत्नभरेण लोलति । कस्याश्चिन्नाभिविवरं गम्भीरं कुण्डलितं – कुण्डलाकारं वर्तते । पुनः कीदृशं नाभिविवरम् ? – त्रिवलीतरङ्गप्रसङ्गतो मण्डलितमिव शोभते ॥

[ ५० ] काचिद् रमणभारं गुरुविकटम्, अतिस्थूलत्वात्, कष्टेन विभर्ति – धारयति । तस्या-

जंपंती महुरक्खर कस्स व[1] कामिणिहिं,
हीरपंतिसारिच्छ[2] डसण झसुरारुणिहिं ॥ ५० ॥
अवर कह व वरमुद्ध हसंतिय अहरयलु,
सोहालउ करकमलु सरलु बाहह[3] जुयलु ।
अन्नह[4] तरुणिकरंगुलिणह[5] उज्जल विमल,
अवर[6] कवोल कलिज्जहिं[7] दाडिमकुसुमदल[8] ॥ ५१ ॥
भमुहजुयल सन्नद्धउ कस्स व[9] भाइयइ[10],
णाइ कोइ कोयंडु[11] अणंगि[12] चडाइयइ ।
इक्कह णेवरजुयलय[13] सुम्मइ रउ घणउ,
अन्नह रयणनिबद्धउ मेहल[14] रुणझुणउ[15] ॥ ५२ ॥

1 C वि । 2 C °सरिच्छ° । 3 B बाहहु । 4 B अण्णहं । 5 B °नख° । 6 A अहव । 7 A कलिज्जिहि । 8 C °कुसम° । 9 B वि । 10 B °यइं । 11 C कोइंडु । 12 C आणंगि । 13 A जुयलउ; C जुयल । 14 B रुणु° । 15 C °झणइ ।

[ टिप्पनकरूपा व्याख्या ]

तस्याश्चलन्त्या उपानहोश्चमचमच्छब्दोऽतिमन्थरस्तु(स्त्व)रितं न सरति । अपरस्या मधुराक्षरं जल्पन्त्याः कामिन्या हीरपङ्क्तिसदृक्षा नागवल्लीदलाऽऽरक्ता दशनाः शोभन्ते ॥ ५० ॥

[ ५१ ] अपरस्या वरमुग्धाया हसन्त्या अधरदलं करकमलं सरलं बाहुयुगलं त्रयं समं शो[भा]ढ्यं वर्त्तते । तत्र कमलभ्रमो यथा–बाहुयुगलं दण्डस्थानीयम्, अधरं दलस्थानीयम्, करं कमलस्थानीयं जातम् । एवं कमलभ्रमः । अन्यस्यास्तरुण्याः कराङ्गुलिनखा उज्ज्वला विमला[ः] सो(शो)भन्ते । अपरस्याः कपोलौ दाडिमकुश-(सु)मदलौ शोभतः ॥ ५१ ॥

[ ५२ ] कस्याश्चिद् भ्रूयुगलं सन्नद्धं श्लक्ष्णं भाति । मन्ये कमपि कोदण्डं मदनेन चटाप्यते । एकस्या नूपुरयुगलस्य घनः शब्दः श्रूयते । अन्यस्या रत्ननिबद्धाया मेखलाया रुणझुणशब्दः श्रूयते ॥ ५२ ॥

[ अवचूरिका ]

श्चलन्त्या उपानहोश्चमचमशब्दोऽतिमन्थरस्त्वरितं न श(स)रति । अपरस्या मधुराक्षरं जल्पन्त्याः कामिन्या हीरपङ्क्तिसदृक्षा नागवल्लीदलारक्ता दशनाः शोभन्ते ॥

[ ५१ ] अपरस्या वरमुग्धाया हसन्त्या अधरदलं करकमलं बाहुयुगलं समं शोभाढ्यं वर्तते । तत्र कमलभ्रमो यथा–अधरं दलस्थानीयम्, करं कमलस्थानीयम्, सरलं बाहुयुगलं दण्डस्थानीयम् । अन्यस्या अपि नाय(यि)कायाः कराङ्गुलीषु नखा उज्ज्वला भान्ति । अपरस्याः कपोलौ दाडिमकुसुमदलौ कल्प्येते ॥

[ ५२ ] कस्याश्चिद् भ्रूयुगलं श्लक्ष्णं भाति । मन्ये कोदण्डं कमपि मदनेन चटाप्यते । एकस्या अपि नेवरयुगले घनो रवः श्रूयते, अन्यस्या रत्ननिबद्धमेखलारणझणत्कारः श्रूयते ॥

चिक्कणरउ चंबाइहिं लीलंतिय पवरु,[1]
णवसर[2] आगमि[3] णज्जइ सारसि रसिउ सरु[4] ।
पंचमु[5] कह व झुणंतिय झीणउ महुरयरु[6],
णायं[7] तुंबरि सज्जिउ सुरपिक्खणइ[8] सरु ॥ ५३ ॥
इम इक्किक्कह[9] तत्थ रूवु[10] जोयंतयह[11],
झसुरपिंग पय खलहि[12] पहिय पवहंतयह[13] ।
अह बाहिरि[14] परिभमणि[15] कोइ जइ नीसरइ,
पिक्खिवि[16] विविह[17] उज्जाणु[18] भुवणु तहि[19] वीसरइ ॥५४॥

*

1 A पवर । 2 C °सरु । 3 A °अग्गि मुणिज्जइ; B अग्गमि लग्गय । 4 C सारसिउ सरु । 5 C पंचम । 6 A °यर । 7 C णारयतुंबरु । 8 B °पिक्खणय । 9 B C इक्कक्कह । 10 B रूव । 11 A जोयंतयहं; B जोयंतियंह । 12 C खलहिं । 13 A °तयहं; B °तियहं । 14 A बाहरि; C बाहिर । 15 A °भमण; B °भमणु । 16 B पिखि; A नास्ति 'वि' । 17 C बहि । 18 A उज्जाण; B उजाण । 19 B तह ।

[ टिप्पनकरूपा व्याख्या ]

[ ५३ ] कासांचिन्नाइ(यि)कानां लीलन्तीनां उपानहां प्रवरः चिक्कणः शब्दः प्रवर्त्तते । मन्ये, नवशरदागमे सारसेन रसितम् । कस्याश्चित् कापि पञ्चमं कुर्वन्त्याः क्षीणो मधुरतरः स्वरो भाति स्म । मन्ये सुरप्रेक्षणे तुम्बरेण स्वरः सज्जितः ॥ ५३ ॥

[ ५४ ] एवमेकस्या एकस्यास्तत्र रूपं पश्यतां पथि प्रवहतां पथिकानां झसुरपिङ्गेन नागवल्लीदलाऽऽस्वादनान्मुक्तरसेन [पादाः] स्खलन्ति । अथ बहिः परिभ्रमणार्थे कोऽपि यदि निस्सरति, तदा विविधोद्यानं दृष्ट्वा भुवनानि विस्मरति ॥ ५४ ॥

[ अवचूरिका ]

[ ५३ ] उपानहश्चिक्कणः शब्दः प्रवरं लीलन्तीनां नायिकानां प्रवर्तते । मन्ये नवशरदागमे सारसेन रसितम् । कस्याश्चित् पञ्चमं कुर्वन्त्याः क्षीणो मधुरतरः स्वरो भाति स्म । मन्ये, सुरप्रेक्षणे तुम्बरेण स्वरः सज्जितः ॥

[ ५४ ] एवमेकस्या एकस्यास्तत्र रूपं पश्यतां पथि प्रवहतां पथिकानां नागवल्लीदलास्वादनान्मुक्तरसेन पादाः स्खलन्ति । अथ बहिः परिभ्रमणार्थं कोऽपि यदि निस्सरति तदा विविधोद्यानं दृष्ट्वा भुवनानि विस्मरति ॥

**अथ वनस्पतिनामानि –**

ढल्ल कुंद [1]सयवत्तिय कत्थ [2]व रत्तबल,
कह व[2] ठाइ वर मालइ मालिय तह विमल ।
जूही [3]खट्टण वालू चंबा[4] बउल घण,
केवइ तह [5]कंदुट्टय अणुरत्ता सयण ॥ ५५ ॥
माउलिंग मालूर मोय मायंद मुर,
दक्ख भंभ[6] ईखोड[7] पीण[8] आरू सियर[9] ।
तरुणताल तंमाल[10] तरुण तुंबर [11]खयर,
संजिय[12] सइवत्तिय[13] सिरीस[14] सीसम[15] अयर[16] ॥ ५६ ॥
पिप्पल[17] पाडल पुय पलास घणसारवण,
मणहर [18]तुज्ज हिरन्न भुज्ज[19] धय[20] वंसवण ।
नालिएर[21] निंबोय निविंजिय[22] निंब वड,
ढक्क[23] चूय अंबिलिय[24] कणयचंदण निवड ॥ ५७ ॥
आमरूय[25] गुल्लर महूय आमलि[26] अभय,
नायवेलि मंजिट्ठ पसरि[27] दह दिसह[28] गय ॥ ५८ ॥
{†मंदार जाइ तह सिंदुवार ।
महमहइ सु वालउ अतिहि फार† ॥ रासाछन्दः ।}

1 A सइ° । 2 C वि । 3 B जूहियखण । 4 C वउवा । 5 C कुंदुट्टय; B कंदुट्ठइ । 6 A भभा; B भंभा । 7 C आखोड । 8 B खीण; C पीड । 9 A °सिहर । 10 B तमाल । 11 B तुंबरु खयरु । 12 A संजीअ । 13 A °वत्तीअ । 14 A C सरीस । 15 A सीसव । 16 A अपर । 17 A पिप्पड । 18 A तुबू । 19 A भुज । 20 C धर । 21 B C नालएर । 22 C निवंजिय । 23 A कक्क; B डक्क । 24 A अंबिलीअ° । 25 C आममूर । 26 A आवलीअ । 27 B परार । 28 A दिसिहि । † एतत्पादयुग्मं केवलं B आदर्शे प्राप्यते, नोपलभ्यते A C आदर्शयुग्मे ।

[ टिप्पनकरूपा व्याख्या ]

[ ५५–५८ ] नामान्येव ॥ ५५–५८ ॥

किंकिल्लि कुंज कुंकुम[1] कवोल,
सुरयार सरल[2] सल्लइ सलोल ।
वायंब[3] निंब निंबू[4] चिनार,
सिमि साय सरल सिय देवदार ॥ ५९ ॥ [पद्धडी ।]

लेसूड[5] एल लंबिय[6] लवंग[7],
कणयार[8] कइर[9] कुरबय[10] खतंग ।
अंबिलिय[11] कयंब बिभीय चोय[12]
रत्तंजण जंबुय गुरु असोय ॥ ६० ॥

जंबीर[13] सुहंजण[14] नायरंग,
बिज्जउरिय[15] अयरुय[16] पीयरंग ।
नंदण जिम[17] सोहइ[18] रत्तसाल[19],
जिह पल्लव दीसइ[20] जणु पवाल[21] ॥ ६१ ॥

आरिट्ठिय[22] दमणय[23] गिद्द चीड,
जिह[24] आलइ दीसइ सउणि[25] भीड ।
खज्जूरि[26] बेरि[27] भाहण[28] सयाइं,
बोहेय[29] डवण[30] तुलसीयलाइं ॥ ६२ ॥

---

1 A कुंजम; C कुंकम । 2 B °सल° । 3 A नायंब । 4 A निंबू अ । 5 A ल्हेसूड; B लेसूडिय । 6 C लंवय । 7 B एल लवंग चंग । 8 B कणयर । 9 B करीर; C कलिय । 10 A कुरबइ; B कुरुवइ । 11 A अंविलीक°; B अंबिलीययक° । 12 B चूय । 13 A जंमीर । 14 C सुहिंजण । 15 A बिजउरी अइरुई । 16 C बिज्जउरीय आरू । 17 A वण । 18 A सोहइहि; C सोहहि । 19 °साल्लु । 20 A दिसहि । 21 A पवालु । 22 A आरीठय; C आरट्ठिय । 23 B दमणइ; C दवण । 24 B जिहि । 25 A C सउण । 26 C खजूर । 27 B बोरि । 28 A भाहुणि; B भाहणु । 29 B वाहेय । 30 C डुवण; B डुवणु ।

नाएसरि मोडिम[1] पूगमाल,
[2]महमहइ छम्म मरुअइ विसाल ॥ ६३ ॥ [ अर्द्धम् ]
अन्नय सेस महीरुह[3] अत्थि जि[4] ससिवयणि,
मुणइ णामु तह कवणु सरोरुहदलनयणि ।
अह सव्वइ संखेविणु निवड[5] निरंतरिण,
जोयण दस गंमिज्जइ तरुछायंतरिण[6] ॥ ६४ ॥

*

[ †पुरउ सुवित्थरु वन्नउ अद्धउ जइवि,
करि अज्जु गमणु महु भगा धू अत्थवइ रवि ॥ ]

*

तवण[7] तित्थु[8] चाउद्दिसि मियच्छि[9] वखाणियइ[10],
मूलत्थाणु[11] सुपसिद्धउ महियलि जाणियइ ।
तिह हुंतउ हउं[12] इक्किण[13] लेहउ पेसियउ[14],
खंभाइत्तइं[15] वच्चउं[16] पहुआएसियउ ॥ ६५ ॥

1 A मोडिव । 2 B अह । 3 A °रुहु । 4 B C जु । 5 B निविड । 6 B °तरुणि; C °तिरिण । † एतत्पादयुगलं केवलं B आदर्शे समुपलभ्यते । 7 A B तवणि । 8 C तित्थि । 9 C मिच्छ । 10 A वखाणीयइ । 11 A मूलथाण° । 12 B C हउ । 13 B इक्कणि । 14 A पेसिउ । 15 A खंभाइत्तिहिं । 16 A B वच्चउ ।

[ टिप्पनकरूपा व्याख्या ]

[ ६२ ] अत्र शकुनि[नां]–पक्षिणां आलयानां–गृहाणां भीडा दृश्यते । शेषं गम्यम् ॥ ६२ ॥

[ ६४ ] इत्यादिवृक्षजातिषु सुगमं नामान्येव ॥ ६४ ॥

[ ६५ ] हे मृगाक्षि ! सामोरूपुरे तपनतीर्थं–सूर्यकुण्डं प्रसिद्धम् । चतुर्दिक्षु व्याख्यायते । तन्मूलस्थानं नाम प्रसिद्धम् । सर्वैरपि नरामरैर्ज्ञायते । ततोऽहं लेखवाहक एकेन प्रेक्षि(षि)तः । स्तम्भतीर्थे प्रभ्वादिष्टो व्रजामि–गच्छामि ॥ ६५ ॥

[ अवचूरिका ]

[ ६२ ] शकुनि=पक्षी, आलय=नीडं । शेषं नामान्येव ॥

[ ६४ ] अन्येऽपि शेषमहीरुहा वृक्षा हे शशिवदनि(ने) ! ये सन्ति तेषां नामानि हे कमलनेत्रे ! को वेत्ति । अथ सर्वेऽपि संक्षेपेण निबिडा घना निरन्तराः सन्ति, तेषां छायया दशयोजनानि गम्यन्ते ॥

[ ६५ ] हे मृगाक्षि ! यत्र सामोरपुरे तपनतीर्थं–सूर्यकुण्डं प्रसिद्धं व्याख्यायते । तन्मूलस्था[नं] नाम प्रसिद्धं सर्वैरपि नरामरैः श्रूयते । ततोऽहं लेखवाहक एकेन प्रेषितः स्तम्भतीर्थे प्रभा(भ्वा)दिष्टो व्रजामि ॥

एय वयण[1] आयन्नवि[2] सिंधुब्भववयणि,
सससिवि[3] सासु दीहुन्हउ[4] सलिलब्भवनयणि ।
तोडि करंगुलि करुण सगग्गिर गिरपसरु,
जालंधरि व[5] समीरिण मुंध[6] थरहरिय[7] चिरु ॥ ६६ ॥

रुइवि[8] खणद्धु[9] फुसवि नयण पुण वज्जरिउ[10],
खंभाइत्तह[11] णामि[12] पहिय तणु[13] जज्जरिउ[14] ।
तह मह[15] अच्छइ णाहु[16] विरहउल्हावयरु[17],
अहिय कालु गम्मियउ ण आयउ णिद्दयरु ॥ ६७ ॥

पउ मोडवि[18] निमिसिद्धु[19] पहिय जइ[20] दय करहि,
कहउं[21] किंपि संदेसउ पिय तुच्छक्खरहि[22] ।

1 C वयणु । 2 A आयन्निवि । 3 A ससिउसासु । 4 B दीउन्हउ; C दीव उन्हउ । 5 C कसमी° । 6 A मुद्ध । 7 A °हरीअ । 8 B रुयवि । 9 A खणद्धउ; B खणद्धु वि । 10 C वज्जरियउ । 11 B °इत्तिहिं । 12 C नामु; B नामि । 13 B पहितणु । 14 C जज्जरियउ । 15 A महु । 16 B C नाहु । 17 °बयरु । 18 B मोडिवि । 19 B निमिसद्धु । 20 जे । 21 A B कहउ । 22 A B तुच्छखरिहि ।

[ टिप्पनकरूपा व्याख्या ]

[ ६६ ] सिन्धूद्भववदना–चन्द्रमुखी, सलिलोद्भवनयना–कमलाक्षी, एतानि वचनान्याकर्ण्य, दीर्घोच्छ्वासं निःश्वस्य, कराङ्गुलीस्त्रोटय(यि)त्वा सगद्गद्गीःप्रसरा, वाताहता जालन्धरीवत्–कदलीवत्, चिरं मुग्धा थरहरिता–कम्पिता ॥ ६६ ॥

[ ६७ ] क्षणार्द्धे रुदित्वा, नेत्रे मार्जय(यि)त्वा, तया पुनरुक्तम्–हे पथिक! स्तम्भतीर्थनाम्ना मम शरीरं जर्जरितम् । तत्र विरहस्फेटको मम भर्त्ता वर्त्तते, तं विना मयाऽधिकः कालो निर्गमितः । परं स निर्दयो न समागतः ॥ ६७ ॥

[ ६८ ] हे पथिक ! यदि दयां कृत्वा क्षणार्द्धं पदं मोटयसि, तदा किञ्चित्

[ अवचूरिका ]

[ ६६ ] सिन्धूद्भववदना–चन्द्रमुखी, सलिलोद्भवनयना–कमलाक्षी, एतानि वचनान्याकर्ण्य दीर्घोष्णं श्वासं निःश्वस्य कराङ्गुलीर्मर्दयित्वा सगद्गद्गीःप्रसरा वाताहता जालन्धरी=कदलीवत् चिरं मुग्धा थरहरिता–कम्पिता ॥

[ ६७ ] क्षणार्धं रुदित्वा, नेत्रे मार्जयित्वा, तया पुनरुक्तम्–हे पथिक ! स्तम्भतीर्थनाम्ना मम शरीरं जर्जरितम् । तत्र विरहफेटको मम भर्त्ता वर्त्तते । तं विना मयाऽधिककालो निर्गमितः, परं स निर्दयो न समागतः ॥

[ ६८ ] हे पथिक! यदि दयां कृत्वा क्षणार्धं पदं मोटयसि–उपविशसि, तदा किंचित् संदे-

पहिउ भणइ कणयंगि कहह किं रुन्नयण,
झिज्जंती णिरु दीसहि उव्विन्नमियनयण[1]† ॥ ६८ ॥

*

जसु णिग्गमि [2]रेणुक्करडि, कीअ[3] ण विरहदवेण ।
किम[4] दिज्जइ संदेसडउ[5], तसु णिट्ठुरइ[6] मणेण ॥ ६९ ॥

*

**[ *पाणी तणइ विउइ, कादमही फुट्टइ हिआ ।
जइ इम माणसु होइ, नेहु त साचउ जाणीयइ ॥
†कंतु कहिव्वउ भंति विणु, धू पंथिय जाणाइं ।
अज्जइ जीविउ कंत विणु, तिणि संदेसइ काइं ॥ ]**

*

जसु पवसंत[7] ण पवसिआ[8], मुइअ[9] विओइ[10] ण जासु ।
लज्जिज्जउ संदेसडउ, दिंती पहिय पियासु ॥ ७० ॥

1 A मयणोविन्नवयणि । † 'किं झिज्जहि दिणरयणि उव्विन्निय मियनयण' C आदर्शस्थितमेतत्पाठान्तरम् । 2 B रेणुक्करड; C रेड्डुक्करडि । 3 C कइय; B णिई । 4 A किव । 5 A °संनेहडउ । 6 B निट्ठुरय । 7 C पवसंतु; B पविसंत । 8 B पविसिया । 9 C मुईअ; B मुई । 10 B विउय न; C वियउइ न ।

* एतद् दोधकवृत्तं A आदर्शे उपलभ्यते, परं तत्र नास्योपरि अवचूरिका लिखिता लभ्यते, अतः प्रक्षिप्तमेवेदं प्रतिभाति । † इदमन्यद् दोधकवृत्तं केवलं C आदर्शे समुपलभ्यते । परं तत्रापि नास्योपरि टीप्पनरूपा व्याख्या, अवचूरिका वा कृता लभ्यते, अत इदमपि प्रक्षिप्तमेव ज्ञायते ।

[ टिप्पनकरूपा व्याख्या ]

**संदेशकं प्रियाय तुच्छाक्षरैः जल्पामि । पथिको [भ]णति–हे कनकाङ्गि! कथय । रुदनेन किम्? । उद्विग्नमृगनेत्रे ! नितरां षि(खि)द्यमाना दृश्यसे ॥ ६८ ॥**

**[ ६९ ] ततः सा जीवनेऽपि सल[ज्ज]त्वं प्रकटयन्ती प्राह–यस्य निर्गमे विरहदवेनाहं रेणूत्करं–भस्मपुञ्जं न कृता । अतस्तस्मै निष्ठुरेण मनसा संदेशकः कथं दीयते ॥ ६९ ॥**

**[ ७० ] यतस्तमेवार्थं दृढयन्नाह–यस्य प्रवसतो न प्रवि(व)सिता । अन्यच्च यस्य वियोगे न मृता । अतस्तस्मै प्रियाय संदेशकं ददती लज्जे ॥ ७० ॥**

[ अवचूरिका ]

शकं प्रियाय तुच्छाक्षरैर्जल्पामि । पथिको भणति–हे कनकाङ्गि ! कथय, रोदनेन किम्? । उद्विग्नमृगनेत्रे ! नितरामत्यर्थं खिद्यमाना दृश्यसे ॥

[ ६९ ] ततः सा जीवनेऽपि, सजल( सलज्ज )त्वं प्रकटयन्ती प्राह–तस्य निर्गमे विरहदवेनाहं रेणूत्करं–भस्मपुञ्जं न कृता । अतस्तस्मै निष्ठुरेण मनसा संदेशकः कथं दीयते ॥

[ ७० ] यतस्तमेवार्थं दृढयन्नाह–यस्य प्रविश(वस)तोऽपि न प्रवि(व)सिता । अन्यच्च यस्य वियोगे न मृता । अतस्तस्मै संदेशकं ददती लज्जे ॥

लज्जवि[1] पंथिय[2] जइ रहउं[3], हियउ न धरणउ जाइ[4] ।
गाह पढिज्जसु[5] इक्क पिय[6], कर लेविणु मन्नाइ[7] ॥ ७१ ॥

*

तुह[8] विरहपहरसंचूरिआइं विहडंति जं न अंगाइं[9] ।
तं अज्जकल्लसंघडण[10] ओसहे णाह तग्गंति ॥ ७२ ॥

*

*ऊसासडउ न मिल्हवउ[11], [12]दज्झण [13]अंग भएण ।
जिम हउ[14] मुक्की वल्लहइ, तिम सो मुक्क[15] जमेण[16] ॥ ७३ ॥

*

कहवि इय[17] गाह[18] पंथिय, [19]मन्नाएवि पिउ ।
दोहा पंच कहिज्जसु, गुरुविणएण सउ ॥ ७४ ॥

1 B लज्जिवि । 2 A पथिय । 3 A B रहउ । 4 B ज्जाइं । 5 B पढिज्जसि । 6 A पिअ । 7 A मंनाइ । 8 B तुव; C तुअ । 9 C अंगांइं । 10 A संघड उसहे°; B संघडसहे° । 11 B मिल्हियइ । 12 B डज्झण । 13 C दंग° । 14 A हु । 15 B मुक्कु । 16 A जवेण; C जिमेण । * सर्वेषु आदर्शेषु एतद् दोधकवृत्तमुपलभ्यते, व्याख्याऽपि कृता विद्यते, परं अग्रिमपद्यकथितवर्णनानुसारेण प्रक्षिप्तमिदं प्रतिभाति । 17 B इह; A इअ । 18 A गाहा । 19 A मंनाएवि ।

[ टिप्पनकरूपाव्याख्या ]

[ ७१ ] हे पथिक! लज्जां कृत्वा यदि तिष्ठामि तदा हृदयं धारयितुं न शक्ता । अत एकां गाथां प्रियं प्रति पठेः । करं गृहीत्वा तमनुनये[ः] । सकोपचित्तप्रसादनमनुनयः ॥ ७१ ॥

[ ७२ ] तामाह – हे नाथ! त्वद्विरहप्रहारसंचूर्णितानि अङ्गानि यन्न विघटन्ते तत्र किं कारण[म्] ? – अद्य कल्ये संघटन[म्] – मेल इत्यौषधप्रभावेन तिष्ठन्ति ॥ ७२ ॥

[ ७३ ] तद्वस्तु रक्षन्ती भर्त्त(र्त्रे) आशिषा(ष)माह – अङ्गदहनभयादुस्वा(च्छ्वा)सा[न्] न मुञ्चामि । तत आशीः – यथाऽहं वल्लभेन मुक्ता तथा स ज(य)मेन मुच्यात् ॥ ७३ ॥

[ ७४ ] भो पथिक! ए(इ)मां गाथां कथय(यि)त्वा प्रियं मनापयेत् । ततः पञ्च दोधकाः कथनीयाः । गरिष्ठविनयेन सह ॥ ७४ ॥

[ अवचूरिका ]

[ ७१ ] हे पथिक! लज्जां कृत्वा यदि तिष्ठामि, तदा हृदयं धर्तुं न शक्नोमि । एकां गाथां प्रियं प्रति पठेः । करं गृहीत्वा प्रियं मानयेः – प्रियमनुकूलयेः ॥

[ ७२ ] तामाह – हे नाथ! त्वद्विरहप्रहारसंचूर्णितान्यङ्गानि यन्न विघटन्ते, तत्र किं कारणम्? – अद्य कल्ये संघ[ट]नम् – मेल इत्यौषधप्रभावेन तिष्ठन्ति ॥

[ ७३ ] तद्वस्तु रक्षन्ती भर्त्रे आशिषमाह – अङ्गदहनभयादुच्छ्वासा[न्] न मुञ्चामि । तत आशीर्यथाऽहं वल्लभेन मुक्ता तथा स ज(य)मेन मुच्यात् ॥

[ ७४ ] हे पथिक! एतां गाथां पठित्वा प्रियं मानयेः, पञ्च दोधकान् गुरुविनयेन सह कथयेः ॥

पिअविरहानलसंतविअ, जइ वच्चउ सुरलोइ ।
तुअ छड्डिवि हियअट्ठियह, तं परिवाडि ण होइ ॥ ७५ ॥
कंत जु तइ[1] हिअयट्ठियह[2], विरह[3] विडंबइ काउ ।
सप्पुरिसह मरणाअहिउ[4], परपरिहव[5] संताउ ॥ ७६ ॥
गरुअउ परिहवु[6] कि[7] न सहउ[8], पइ पोरिस[9] निलएण ।
जिहि[10] अंगिहि तूं[11] विलसियउ[12], ते दड्ढा[13] विरहेण ॥ ७७ ॥
विरह परिग्गह छावडइ[14], पहराविउ[15] निरवक्खि ।
तुट्टी देह ण हउ[16] हियउ, तुअ[17] संमाणिय[18] पिक्खि ॥ ७८ ॥

1 C तुव । 2 B °ट्ठियहं । 3 B विरहु । 4 A C मरणाहिअउ । 5 A °परिहउ । 6 A B परिहमु । 7 B किम । 8 C मइ सहिथउ । 9 A पोरस; B पउरिस । 10 A जिह; B जिहं । 11 A तुं; B तू । 12 A विलसिउ । 13 B दड्डा । 14 B छावडई; C छावडउ । 15 A पहिराविउ । 16 C न हियउ हयउ । 17 B तुय; C तुह । 18 B सामाणी ।

[ टिप्पनकरूपा व्याख्या ]

[ ७५ ] मरणेऽपि दूषणमाह – त्वां हृदयस्थितं मुक्त्वा त्वद्विरहानलसंतप्ता यदि स्वर्गं व्रजामि, तदा प्रतिपन्नं न भवति । यतोऽहं त्वत्सहचरी ॥ ७५ ॥

[ ७६ ] भार्याया भर्तुर्विरहकष्टे भर्तुर्दूषणमित्याह – हे कान्त ! यत् त्वयि हृदयस्थितेऽपि सति विरहः कायं – देहं विडम्बयति, तत् तवैव लज्जा । यतः, सत्पुरुषाणां परकृतः पराभवः संतापो मरणादधिकः ॥ ७६ ॥

[ ७७ ] भर्त्तारं निन्दन्त्याह – गुरुतरं पराभवं त्वयि पौर(रु)षनिलयेऽपि सति किं न सहामि, अपि तु सहाम्येव । यतो यैरङ्गैस्त्वं विलसितः, तान्यङ्गानि विरहेण दग्धानि ॥ ७७ ॥

[ ७८ ] पुनर्भर्तृपौरुषं प्रकटयन्त्याह – विरहशत्रुपरिग्रहेण शरीरे निरपेक्षं

[ अवचूरिका ]

[ ७५ ] मरणेऽपि दूषणमाह – त्वां हृदयस्थितं मुक्त्वा त्वद्विरहानलसंतप्ता यदि स्वर्गं व्रजामि, तदा प्रतिपन्नं न भवति, यतोऽहं त्वत्सहचारिणी ॥

[ ७६ ] भार्याया भर्तृविरहकष्टे भर्तुर्दूषणमित्याह – हे कान्त ! यदि त्वयि हृदयस्थितेऽपि सति विरहः कायं – देहं विडम्बयति, तत् तवैव लज्जा । यतः सत्पुरुषाणां परकृतः पराभवः सन्तापो मरणादधिकः ॥

[ ७७ ] भर्त्तारं निन्दन्त्याह – गुरुतरं पराभवं त्वयि पौरुषनिलयेऽपि सति किं न सहामि, अपि तु सहाम्येव । यतो यैरङ्गैस्त्वं विलसितस्तान्यङ्गानि विरहेण दग्धानि ॥

[ ७८ ] पुनर्भर्तृपौरुषं प्रकटयन्त्याह – विरहशत्रुपरिग्रहेण शरीरे निरपेक्षं प्रहरितं परं हृदयं न प्रहतं – न स्फोटितम् । किं कारणम् ? – त्वद्युक्तं विलोक्य, सामर्थ्यत्वान्नान्यत् ॥

महु ण समत्थिम[1] विरह सउ[2], ता अच्छउं[3] विलवंति[4]।
पाली रूअ[5] पमाण[6] पर, धण [7]सामिहि घुम्मंति[8] ॥ ७९ ॥

*

संदेसडउ[9] सवित्थरउ, हउ कहणह[10] असमत्थ।
भण[11] पिय[12] इकत्ति[13] बलियडइ[14], बे[15] वि समाणा[16] हत्थ† ॥८०॥

संदेसडउ सवित्थरउ[17], पर मइ कहणु न जाइ।
जो कालंगुलि[18] मूंदडउ[19], सो बाहडी समाइ[20]† ॥ ८१ ॥

*

1 A मणह समत्थिम। 2 B °सिउ। 3 B अच्छउ। 4 A विलवंत। 5 C पालियरूव। 6 A पवाणु। 7 A साई; C सामिय। 8 A घुमंत। 9 A संनेहडउ। 10 B कहिवा। 11 B भणु। 12 A प्रिय। 13 A एकतु; B इकति। 14 C वलयडइ। 15 C दो बि। 16 A समाणइ; B समाणिय। 17 B सविथरउ। 18 A कालुंगुलि। 19 C मुंद°; B मूद°। 20 B समाइं। † C आदर्शे एतौ दोधकौ विपर्ययक्रमेण लिखितौ लभ्येते।

[ टिप्पनकरूपा व्याख्या ]

प्रहरितम्, परं हृदयं न प्रहतम्—न स्फोटितम्। किं कारणम्?—त्वद्युक्तं विलोक्य। सामर्थ्यात्, नान्यत् ॥ ७८ ॥

[ ७९ ] आत्मनोऽसमर्थता[म्], भर्तुः समर्थतामाह—मम विरहेण सह समर्-(म)र्थता नास्ति। अतो विलपन्ती तिष्ठामि। यतो गोपालानां पूत्कारमेव प्रमाणम्। परं धनं—गोकुलं स्वामिभिर्भ्राम्यते, नान्यः ॥ ७९ ॥

[ ८०–८१ ] आत्मनो दोधकद्वयेन दुर्बलतामाह—'संदेसडउ०'—[ अत्र प्रथमदोधकस्य व्याख्या नोपलभ्यते ] संदेस(श)को विस्तीर्णः, मया कथि(थयि)तुं न पार्यते। यत् कालाङ्गुलौ—कनिष्ठाङ्गुलौ मुद्रारत्नमासीत्, तद् बाहौ धृ(ध्रि)यते ॥ ८०–८१ ॥

[ अवचूरिका ]

[ ७९ ] आत्मनोऽसमर्थतां भर्तुः समर्थतामाह—मम विरहेण समर्थता नास्ति, अतो विलपन्ती तिष्ठामि। यतो गोपालानां पूत्कारमेव प्रमाणम्, परं गोधनं—गोकुलं स्वामिभिर्भ्राम्यते, नान्यैः ॥

[ ८० ] हे पथिक! सन्देशकं विस्तरमहं कथि(थयि)तुमसमर्था, परं हे पथिक! प्रियं प्रति भण—एकस्मिन् वलये द्वौ हस्तौ मातः ॥

[ ८१ ] हे पथिक! सन्देशकं सविस्तरं मया कथि(थयि)तुं न पार्यते—न शक्यते, परमिति कथनीयम्—यः काल्यङ्गुल्यां मुद्रक आसीत् स बाहुं समायाति ॥

तुरिय [1]णियगमणु इच्छंतु तत्तक्खणे,
दोहया[2] सुणवि[3] साहेइ सुवियक्खणे ।
कहसु अह अहिउ जं किंपि जंपिव्वउ,
मग्गु अइदुग्गु मइ मुंधि[4] जाइव्वउ ॥ ८२ ॥
वयण[5] णिसुणेवि [6]मणमत्थसरवट्टिया,
[7]मयउसरमुक्क णं हरिणि[8] उत्तट्टिया[9] ।
मुक्क दीउन्ह [10]नीसास उससंतिया[11],
पढिय[12] इय[13] गाह[14] णियणयणि[15] वरसंतिया[16] ॥८३॥

1 C निय° । 2 A दोहिया । 3 B सुणिवि । 4 A मुंध; C मुद्धि । 5 C बयण । 6 A मयमत्थ । 7 B मयय° । 8 C हरिण । 9 A उत्तट्टीआ । 10 A णीसास । 11 A उससंतीआ; C ऊसंतिया । 12 A पत्थिय । 13 B इह । 14 A गाहि । 15 C °नयण । 16 A °संतीआ ।

[ टिप्पनकरूपा व्याख्या ]

**[ ८२ ] तस्मिन् क्षणे त्वरितं निजगमनमीप्सन् दोधकौ श्रुत्वा, कः (सः)कथयति–हे सुविचक्षणे ! अथ यत् किमपि अधिकं कथनीयमस्ति, तत् कथय । मया दुर्गो मार्गो गन्तव्यः ॥ ८२ ॥**

**चन्द्रायणच्छन्दः । तल्लक्षणम्–**

सो चंदायणु छंदु फुडु, जहिं धुरि दोहा होइ ।
अह तिणि रहियउ मणहरणु, बुहियणि संसिउ सोइ ।
बुहयणिहि संसियउ सो वि जाणिज्जए, कामिणीमोहणो पुरउ पाढिज्जए ।
मत्त अडवीस सउ जेण विरइज्जए, सो वि चंदायणो छंदु सलहिज्जए ॥

**स(तत्) चन्द्रायणच्छन्दः–यत्रादौ दोधकः, प्रान्ते आसी(अशी)तिमातृको कामिनीमोहनः । अथ दोधकवर्जितः कामिनीमोहन एव चन्द्रायतनम् ।**

**[ ८३ ] पुनर्विरहावस्थां वर्णयन्नाह–पथिकवचनं श्रुत्वा मन्मथशरव्याप्ता मृगव्युशरोन्मुक्ता, वितर्के–हरिणीवदुत्रस्ता जाता । तदा दीर्घोष्णोस्वा(च्छ्वा)सा मुक्ताः । अन्यच्च–उच्छ्वसन्त्या निजनेत्राभ्यां अश्रु वर्षन्त्या एषा गाथा पठिता ॥ ८३ ॥**

[ अवचूरिका ]

[ ८२ ] तस्मिन् क्षणे त्वरितं निजगमनमीप्सन् दोधकौ श्रुत्वा पथिकः कथयति–हे सुविचक्षणे ! अथ यत्किमप्यधिकं कथनीयमस्ति तत्कथय, मया दुर्गो मार्गो गन्तव्यः ॥

चंदायणछन्दः । लक्षणं यथा–

'सो चंदायणछंद फुड जहि धुरि दोहा होइ' ।

[ ८३ ] पथिकवचनं श्रुत्वा मन्मथशरव्याप्ता मृगव्यु=आखेटकिशरोन्मुक्ता, वितर्के हरिणीवदुत्थि(दुःस्थि)ता जाता, तदा दीर्घोष्णं श्वासं मुक्ता (?) । अन्यच्चोच्छ्वसन्त्या निजनेत्राभ्यामश्रु वर्षन्त्या, एषा गाथा पठिता ॥

अणियत्तखणं[1] [2]जलवरिहणेण[3] लज्जंति नयण नहु धिट्ठा[4] ।
खंडववणजलणं विय[5] विरहग्गी[6] तवइ अहिययरं ॥ ८४ ॥

*

पढवि[7] इय[8] गाह मियनयण[9] उव्विन्निया[10],
भणइ[11] पहियस्स अइकरुणदुक्खिन्निया[12] ।
[13]कढिणनीसास[14] रइआससुहविग्घिणे[15],
विन्नि चउपइय[16] पभणिज्ज तसु निग्घिणे[17] ॥ ८५ ॥

*

तुय समरंत[18] समाहि मोहु[19] विसम ट्ठियउ[20],
तह[21] खणि खुवइ कवालु न [22]वामकरट्ठियउ ।

1 A C अणिअत्तक्खणं । 2 A जलि । 3 C वरहिणेण । 4 C धिट्ठी । 5 A चिय । 6 C विरहग्गं । 7 C पढिय । 8 B इह । 9 A °नयणि । 10 A उव्विनीआ । 11 C भणिय । 12 A °दुक्खिन्नीआ । 13 A कठिणणी° । 14 A रइयास°; B रइआसु° । 15 A सुहविघणे; B सहविधिणे । 16 A चउपईय; B चउपई । 17 A B निग्घणे । 18 C समरंतु । 16 A मोह । 20 A विसमठिअउ; B विसमुट्ठियउ । 21 A तं । 22 C बामकरि ।

[ टिप्पनकरूपा व्याख्या ]

[ ८४ ] नेत्रयोरविरतजलप्रवाहस्यानिवृत्तत्वमाह–मम नेत्रे धृष्टे अनिवृत्तलक्षणं जलवर्षणेन न लज्जतः । तदा किं विरहाग्निरुपशान्ता(न्तः) ? । तदाह– षां(खां)डववनज्वलनमिव विरहाग्निम(र)धिकतरं तपति । अत्रोपनयः–यदा धनञ्जयः खाण्डववनं ज्वालयितुं प्रवृत्तः, तदैको विद्याभृदागत्योपशान्तयितुं प्रवृत्तः। तदैव धनञ्जयेन तत्र वैद्युतोऽग्निः क्षिप्तः, अधिकं अधिकं ददाह ॥ ८४ ॥

[ ८५ ] एतां गाथां पठित्वा अतिकरुणदुःखाकीर्णा उद्विग्ना मृगनेत्रा पथिकस्य पुरतो भणति। कठिननिःश्वासमेवंविधं यद् रतं तस्य यदाशासुखं, तस्य विघ्नकारकाय तस्मै निर्घृणाय प्रियाय द्वे चतुष्पदिके भणेः ॥ ८५ ॥

[ ८६ ] तदाह–हे कापालिक !–कपालेन चरन्ति कापालिका(काः), अथवा

[ अवचूरिका ]

[ ८४ ] नेत्रयोरविरलजलप्रवाहत्वमाह–मम नेत्रे धि(धृ)ष्टेऽनिवृत्तलक्षणं जलवर्षणेन न लज्जतः। तदा किं विरहाग्निरुपशान्तः ?। तदाह–खाण्डव[वन]ज्वलनमिव विरहाग्निरधिकतरं तपति । यदा धनञ्जयः खाण्डववनं ज्वालयितुं प्रवृत्तस्तदैको विद्याभृदागत्योपशमइ(यि)तुं प्रवृत्तस्तदैव धनञ्जयेन तत्र वैद्युतोऽग्निः क्षिप्तोऽधिकं ददाह ॥

[ ८५ ] एतां गाथां पठित्वाऽतिकरुणदुःखाकीर्णा उद्विग्ना मृगनेत्रा पथिकस्य पुरतो भणति– कठिननिःश्वासमेवंविधं यद् रतं तस्य यदाशासुखं तस्य विघ्नकारकाय तस्मै निर्घृणाय प्रियाय द्वे चतुष्पदिके भणेः ॥

[ ८६ ] हे पथिक !–कपालेन चरन्ति कापालिकाः, तस्य सम्बोधनम् [ हे कापालिक ! ] अहं

सिज्जासणउ[1] न[2] मिल्हउ खण[3] खट्टंग लय,
कावालिय[4] कावालिणि[5] तुय[6] विरहेण[7] किय[8] ॥ ८६ ॥
ल्हसिउ अंसु उद्धसिउ[9] अंगु विलुलिय[10] अलय,
हुय [11]उब्भिबिरवयण [12]खलिय विवरीय गय[13] ।
कुंकुमकणयसरिच्छ कंति कसिणावरिय[14],
हुइय[15] मुंध[16] तुय विरहि णिसायर णिसियरिय[17] ॥ ८७ ॥

*

1 A सिज्जासणु । 2 A नहु । 3 A खणु । 4 A काबालीय; B कारालिय । 5 A कवालणि । 6 A तुअ । 7 C विरहेहिं । 8 A किअ । 9 A उद्धसुउ; B उल्हसिउ । 10 A विललिय । 11 A उबिंविर°; C उब्विबर° । 12 C क्खलिय । 13 A गइ । 14 A °वरीअ । 15 A B हुईय । 16 A मुद्ध; B मुंधि । 17 C निसयरिय; B निशियरीय ।

[ टिप्पनकरूपा व्याख्या ]

कं ब्रह्म तस्य अपगता आलि[:] यस्मिन्, सा कपालिका (?) कापालिरेव कापालिकः, तस्य सम्बोधनं कृ(क्रि)यते । अहं तव विरहेण कापालिनी–योगिनी कृता । कथम्?–तव स्मरणसमाधौ मोहो विषमः समुत्थितः । मोहो–मूर्च्छा, मोहः–स्नेहः । ततः कपालं क्षणमपि वामकरान्न दूरीभवति । कपालं–भिक्षुभाजनम्, कपालं–मस्तकम् । अन्यच्च शय्यासनं न मुञ्चामि । शय्याया अधस्तादशनम्, शय्यायामासनम् । तथा खट्वाङ्गं न मुञ्चामि । खट्वाङ्गं–पल्यंकपादम्, योगियोगोपकरणं च ॥ ८६ ॥

[ ८७ ] हे पथिक ! तं वन्दे ( वदेः ), निसा(शा)सु चरतीति निशाचरः । तस्य सम्बोधनम्–हे निशाचर ! मुग्धा तव विरहेण निशाचरी–राक्षसी कृती(ता) । कथम्?–तेजो ह्लसितं–गतम्, [अङ्गं] उद्धषितम्, अलका विलुलिताः । उब्बिम्बिरवदना–फिक्कवदना जाता । स्खलिता विपरीता च गतिरभूत् । कुङ्कुमसदृक्षा कान्तिः कालिमावृता । द्वितीयपक्षेऽप्येवम् ॥ ८७ ॥

[ अवचूरिका ]

तव विरहेण कापालिनी–योगिनी जाता–कृता । कथम्?–तव स्मरणसमाधौ मोहो विषमः समुत्थितः । मोहो–मूर्च्छा, मोहः–स्नेहः । ततः क्षणमपि कपालं वामकरान्न दूरीभवति । कपालं–भिक्षुभाजनम्, कपालं–मस्तकम् । अन्यच्च स(श)य्यासनं न मुञ्चामि । खट्वाङ्गं–पल्यङ्कपादम्, योगियोगोपकरणं च ॥

[ ८७ ] हे पथिक ! तं प्रियं वदेः, निशासु चरतीति निशाचरः, तस्य सम्बोधनम्–हे निशाचर ! मुग्धा तव विरहेण निशाचरी–राक्षसी कृता । कथम्?–तेजो ह्रसितम्, अङ्गमुद्धषितम्, अलका विलुलिता[:] । उब्बिबिरवदना–फिक्कवदना जाता । स्खलिता विपरीता च गतिरभूत् । कुङ्कुमकनकसदृक्षा कान्तिः काल(लि)मावृता । द्वितीयपक्षेऽप्येवम् ॥

तुहु[1] पुणु[2] कज्जि[3] हिआवलउ[4], लिहिवि[5] न सक्कउ[6] लेहु ।
दोहा गाह कहिज्ज[7] पिय, पंथिय [8]करिवि सणेहु ॥ ८८ ॥

*

पाइय[9] पिय वडवानलहु, विरहग्गिहि[10] उप्पत्ति ।
जं सित्तउ थोरंसुयहि[11], जलइ [12]पडिल्ली झत्ति ॥ ८९ ॥
सोसिज्जंत[13] विवज्जइ[14] सासे [15]दीउन्हएहि पसयच्छी[16] ।
निवडंत बाहभर लोयणाइ धूमइण[17] सिच्चंति[18] ॥ ९० ॥

*

पहिउ भणइ [19]पडिउंजि जाउ[20] ससिहरवयणि,
अहवा किवि[21] कहणिज्ज[22] सु महु कहु[23] मियनयणि ।

---

1 C तुह । 2 B पुणि; C पुण । 3 C कज्ज । 4 B हिंयाव° । 5 A लिहवि; B णिहिवि । 6 A सक्कं । 7 B कहिज्जि; C पढिज्ज । 8 A करवि । 9 C पाय । 10 C विरहग्गिय; B °गिहिं । 11 C °सुयहिं । 12 C यडिल्ली । 13 B C सोसिज्जंतु । 14 C बिव° । 15 B दीहुन्ह° । 16 B दीहच्छी । 17 A धू जइ ण; C धूमयण । 18 B C सिज्झति । 19 C पणुउंजि । 20 C जामि । 21 B किंवि; C किहु । 22 C कहिणज्ज । 23 A कय ।

---

[ टिप्पनकरूपा व्याख्या ]

**[ ८८ ] भो पथिक ! त्वं अतितं(अत्यन्तं) कार्यव्याकुलः । अहं लेखो(खं) लिखित्वं(तुं) न शक्नोमि । अतो दोधक[ः] गाथा [च] कथनीया मम वल्लभस्य पुरतः । ममोपरि स्नेहं कृत्वा ॥ ८८ ॥**

**[ ८९ ] विरहाग्नेरतिशायित्वं दोधकेन गाथया चाह – अहमेवं मन्ये विरहाग्नेर्वडवानलादुत्पत्तिः । यत् स्थूलाश्रुवारिभिः सिक्तः, 'पडिल्ली' देशीत्वादधिकं झगिति ज्वलति ॥ ८९ ॥**

**[ ९० ] दीर्घाक्षाः(क्ष्याः) दीर्घोष्णैः श्वासैः सो(शो)ष्यमानो(णो)ऽपि विवर्द्धते विरहाग्निः । यद् धूम्रेण निपतद् बाष्पभरे लोचने स्रवतः ॥ ९० ॥**

**[ ९१ ] पथिको भणति – हे शशधरवदने ! प्रेषय, व्रजामि, अथवा यत् किमपि**

[ अवचूरिका ]

[ ८८ ] हे पथिक ! त्वं कार्याकुलः – उच्छु(त्सु)कः, [ अहं ] लेखं लिखितुं न शक्नोमि । त्वं प्रियाय दोधक-गाथे भणेः । पथिक ! स्नेहं कृत्वा ॥

[ ८९ ] विरहाग्नेरतिशायित्वं दोधक-गाथाभ्यामाह – हे पथिक ! प्रियमाह – अहमेवं मन्ये – विरहाग्नेर्वडवानलादुत्पत्तिः । यत् स्थूलाश्रुभिस्सिक्तः, 'पडिल्ली'देशीत्वादधिकं झगिति – ज्वलति ॥

[ ९० ] हे पथिक ! प्रियं भणेः – दीर्घोष्णैः श्वासैः सोष्यमाना(शोष्यमाणा) सती सा प्रसृताक्षी विपद्यते, परं – यदि चेल्लोचनयोर्बाह्य(ष्प)भरैर्ध्रुवं – निश्चयं यदि सा न सिच्यते ॥

[ ९१ ] पथिको भणति – हे शशधरवदने ! मां प्रेषय, हे मृगनयने ! अथवा यत्किमपि कथ-

कहउ पहिय कि [1]ण कहउ कहिसु किं कहिययण,
जिण[2] किय[3] एह अवत्थ [4]णेहरइरहिययण[5] ॥ ९१ ॥
जिणि[6] हउ विरहह[7] कुहरि एव[8] करि घल्लिया,
अत्थलोहि[9] अकयत्थि इकल्लिय[10] मिल्हिया[11] ।
संदेसडउ सवित्थरु तुहु[12] उत्तावलउ,
कहिय पहिय पिय गाह वत्थु तह[13] डोमिलउ ॥ ९२ ॥

*

तइया[14] निवडंत[15] णिवेसियाइं संगमइ जत्थ णहु हारो ।
इन्हिं[16] सायर-सरिया[17]-गिरि-तरु-दुग्गाइं अंतरिया[18] ॥ ९३ ॥

1 A क न । 2 A जिणि । 3 A कय; C कहिय । 4 B णेहरय°; C णेहदय° । 5 A °मण । 6 A जिग । 7 A विरहु; B विरह । 8 B एम । 9 C °लोह अक° । 10 A इकल्ली । 11 A मिल्हीआ; C नास्ति पदमिदम् । 12 A C तुह । 13 B तहि । 14 A C तईया । 15 C तवडंत । 16 A इन्हं । 17 । A सरीआ । 18 B अंतरियं ।

[ टिप्पनकरूपा व्याख्या ]

कथनीयं तद् हे मृगनेत्रे! कथय। भो पथिक! कथयामि, [ किंवा न कथयामि? ], परं कथयिष्ये। अथवा स्नेहरतिरहिताय तस्मै कथितेन किम्। येनैषाऽवस्था कृता ॥ ९१ ॥

[ ९२ ] येनार्थलोभेन कामिनी मुक्ता। विरहगर्त्तायां क्षिप्ता। संदेशकस्तु [विस्ती]र्णः, त्वं तूच्छ(त्सु)कः। परं तस्मै एकां गाथां [ वस्तुकं ] डोमिलकं च वदेः ॥ ९२ ॥

[ ९३ ] पूर्वसुखानुभवं स्मारयन्ती दुःखं प्रकटमाह – तदा त्वयि निव(बि)डं यथानिवेसि(शि)ते अवयो(आवयो)रन्तरे हारो न सङ्क्रान्तः। इदानीं सागर-सरित्दुर्गादि अन्तरितम् ॥ ९३ ॥

[ अवचूरिका ]

नीयं तन्मम कथय। हे पथिक! कथयामि, किं न कथयामि वा?, परं कथयिष्ये, तेन कथितेन किम्। स्नेह[रति]रहितेन येनैषाऽवस्था कृता ॥

[ ९२ ] विरहकुहरे – विरहगर्त्तायां येनाहं क्षिप्ता। एवं कृत्वा – क्षिप्त्वा, अर्थलोभात् अकृतार्थे-नैकाकिनी मुक्ता। सन्देशकं(कः) सविस्तरः, त्वमुच्छ(त्सु)कः। प्रियाय कथेः(थयेः) – गाथां वस्तुकं च डोमिलम् ॥

[ ९३ ] पूर्वसुखानुभवं स्मारयन्ती दुःखं प्रकटमाह – यदा त्वयि निवडंत – यथानिवेशित आवयोरन्तः हारो न संक्रान्तः, इदानीं सागरसरिद्गिरितरुदुर्गाश्चान्तरिताः ॥

